योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 317 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 11 सितम्बर 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं परुषकारेण विना दैवं न सिद्धयति॥

अर्थ – जैसे एक पहिये से रथ नहीं चल सकता। ठीक उसी प्रकार बिना पुरुषार्थ के भाग्य सिद्ध नहीं हो सकता है।

### संक्षेपेण वार्ताः

## भारते 18 प्रतिशत जनाः कोविड् वाक्सिनस्य मात्राद्वयमपि स्वीचक्रुः




**नवदिल्ली।** राष्ट्रे अष्टादशोपरिवयस्केषु 18इ जनाः कोविड्वाक्सिनस्य मात्राद्वयमपि स्वीकृतवन्त इति एस्एिम्आरसंस्थायाः निदेशकः बलराम भार्गवः अब्रवीत। 58 जनाः मात्रामेकां स्वीकृतवन्तः अद्यावधि 72 कोटि मात्राणि वाक्सिनौषधानि वितरीतानि। अधुना प्रतिदिनं विंशतिलक्षं जनाः वाक्सिनानि स्वीकुर्वन्तः सन्ति। वाक्सिनीकरण प्रवर्तनानि ऊर्जस्वलतया अग्रे गच्छन्त्यपि राष्ट्रं कोविड्महामार्याः द्वितीयतरं एव वर्तमानमिति स्वास्थ्य सचिवेन राजेष् भूषणेनोक्तम्। प्रतिदिन प्रकरणानां 68 केरले एव। राज्यस्य सर्वाणि जनपदानि समेत्य आराष्ट्रं 35 जनपदेषु टिपि आरमानं प्रतिशतं दशाधिकमस्ति। आगामिषु दसरा, दीपावलिः, क्रिसतुमस् इत्यादिषु उत्सवेषु अतिजाग्रता करणीया इति सर्वकारेण निर्दिष्टम्।

**प्रयागराज वायुयान स्थात्रात् प्रयागराजस्य उच्च न्यायालयं यावत् राजमार्गाः निरिक्षिताः अधिकारिभिः, एवम्विधः प्रशासनं यात्रासौलभ्याय तत्परं दृश्यते**

# राष्ट्रपतिः अद्य महानगरे षट् घण्टात्मके काले रंस्यते



*प्रयागराजः। वार्ताहरः। राष्ट्रपतेः रामनाथ कोविंदस्य अद्य शनिवासरे प्रयागराजे आगमनम् सुनिश्चितम्। एक दिवसीये प्रवासे आगम्यमाणः राष्ट्रपतिः प्रायः षट् घण्टात्मके काले नगरेरंस्यते। राष्ट्रपतिः इलाहाबादउच्चन्यायालयस्य कार्यक्रमे प्रतिभागं का-रिष्यति तदुपरि स सैन्य वायुयानेन देहलीं प्रतिप्रत्या वर्तिष्यति। भारतस्य महामहिमः राष्ट्रपतिः श्री रामनाथ कोविन्दमहोदयः प्रयागराजं समागमिष्यति। तेषामागमनं सुकरं भवेत् एतदर्थं सर्वीं व्यवस्थामनुकूलयितुं सर्वविभागसम्बद्धाः पदाधिकारिणः तत्पराः आसन्। विशेष रूपेण विद्युत् विभागः सुव्यवस्थित प्रकाशाय निर्विघ्नाय च सन्नद्धः वर्तते। प्रयागराज वायुयान स्थात्रात् प्रयागराजस्य उच्च न्यायालयं यावत् राजमार्गाः निरिक्षिताः अधिकारिभिः एवम्विधः प्रशासनं यात्रासौलभ्याय तत्परं दृश्यते।*

## वरिष्ठः आईएएस डॉ ब्रह्मदेव राम तिवारी अवरमुख्य निर्वाचन अधिकारी नियुक्तः



**लखनऊ/ प्रयागराजः।** उत्तरप्रदेश शासनेन वरिष्ठः आईएएस विमलछविमानं निष्कलंकं सक्रियं च डॉ ब्रह्मदेवराम तिवारी महाभागं विशेष सचिवः निर्वाचनंअथ च अवरमुख्य निर्वाचन अधिकारी इति पदे नियुक्तम्। डॉ तिवारी कानपुरस्य जिलाधिकारि पदमपि अलंचकार। सक्रियः आईएएस धर्मशीलश्च मन्यतेऽयं अधिकारी।

**प्रदेशस्य पूर्व मुख्यमंत्रिणः कल्याण सिंहस्य अस्थि विसर्जनं प्रयागराजे संगमे अभवत्।**



# गृहे-गृहे स्थाप्यन्तेस्म गणपतिः

## पूजनं अर्चनं कृत्वा मोदकस्य भोगः समर्प्यतेस्म

**प्रयागराजः। वार्ताहरः।** गणेश चतुर्थ्यामवसरे श्रद्धालुभिः स्व-स्वगृहे एव गणपतिंस्थाप्य अर्चनम् पूजनम् समारभ्यतेस्म। वाद्ययन्त्रैः सहनृत्यं उद्घोषं कुर्वन्तः मूर्ति निर्माण स्थलतः मूर्तिंआदाय पूजनम् समारभ्यतेस्म। कोरोनाकालस्य अनेकेसु प्रतिबन्धेस्वपि शुक्रवासरतः गणपतिउत्सवः श्रद्धयोल्लासेन प्रारम्भोऽभवत्। दस दिवसीयोऽयं महोत्सवः अस्मिन् वर्षेऽपिवृहद् मण्डपेसु न कृत्वा गृहेस्वेव प्रथम पूज्यस्य गजाननस्य लघ्वीं-लघ्वींप्रतिमाः संस्थाप्य पारम्परिक रूपेण पूजनं अर्चनं कृत्वामोदकस्य भोगः समर्प्यतेस्म। बैरहना क्षेत्रे गणपतिः मयूर पक्षेसु विराजितः क्रियन्तेस्म। सार्वजनिक गणेश महोत्सव समिति प्राचीन बैरहना इत्यस्य तत्वावधाने आशीष पाण्डेयस्य संयोजनेगणपतिः मयूर पक्षेसु राराजते। अत्र एक कुन्तल परिमितं मोदकस्य भोगः समर्पितो भविष्यति। अत्र दिवदिवसीय न अपितु पंचदिवसीय एव महोत्सवः आयोजितः 13 सितम्बरे मोदकस्य महाप्रसादः वितरितो भविष्यति।





## प्रतिरोध शिक्षा केन्द्रे बालिकानामपि प्रवेशानुज्ञा

**नवदिल्ली।** भारतस्य अभिमानकेन्द्रत्वेन वर्तमानायां एन् डि ए संस्थायां [National Defense Academy] बालिकानामपि प्रवेशं कर्तुम् अनुज्ञां दांतुं निर्णीतमिति केन्द्रसर्वकारः सवोच्चन्यायालयं न्यवेदयत। सेनायाः उन्नतस्तरे एव एतदर्थं निणऱ्यः विहित इति 'अडीषणल् सोलिसिटर जनरल' एश्वर्या भाट्टी इत्यनया निवेदितम। अनेन निर्णयेन महिलानामपि सायुधसेनायां चिरनियुक्तेः अवसरः लभ्यते।

## वित्तव्यापारार्थजगतः वार्ताः संक्षेपेण

1. वित्तीय कोषागारेभ्यः ऋणभाराशोधन परायेण त्र्चतुराब्जमितधनं बायडेन्सेन स्वीकरणाय प्रयतते।
2. विपणीतः लिप चत्वर्याब्जमितं तद्वत् कॉलेज डेखो द्वाब्जमितधनं आव्हयेत्।
3. केन्द्रीय मुख्य सुरक्षा परिषदेन भूदलस्य सैन्येभ्यः अतिविशालभारवाहनाय उपयुज्य विमानयानानां देशे निर्माणाय टाटा - एअरबस संयुक्त समवायाय अनुमतिं दत्तवान्। राष्ट्रिय संरक्षण प्रबोधिनी मार्गतः महिलानां वनितानां देशस्य सुरक्षा बलस्य पूर्णरूपेण स्थायी भावनया मुख्यभूमिका मूख्यप्रवाहे पदभारं वहनाय सहमतिं प्राप्तवान्। चलच्चित्रगृहरूपेण संरक्षणार्थं व्यवस्थाप्रणालिं निर्माणाय आगामी द्वि त्रि वर्षपर्यन्तं कालं यापयति।
4. गिफ्टसेवा क्षेत्रे ऑगस्ट मासपर्यन्तं त्रसपादेकशतमाधिकमितार्थ व्यवहाराः अभवत्। एवमेव त्रयाशीत्याधिकद्विशतं नूतनाः समवायाः एतेस्मिन् पञ्जीकृतव्रतः।
5. विगते वर्षे विदेशीयाः वैयक्तिक सम्मूच्चयधनराशिं निवेशं प्रतिभूति सम्पत्त्यायाः त्रसार्धद्विनिखर्वमितेन विवर्ध्य त्रसार्धषण्निखर्वमितं संजातम्।
6.एस्बिआय् लाईफ समवायस्य द्विप्रतिशतमस्य स्वाधीन भागाय विक्रेतुम् द्वादशाब्जमितधनं अर्जनाय कॅनडा भविष्यनिर्वाह निधीं प्रयासरतः अस्ति।
7. वैश्विक व्याजलाभदरसंरचनाबद्धपत्राणां आधारितं निर्देशकानां मध्ये भारतदेशस्य समावेशेन अस्माकं पार्श्वे त्रसार्धद्विनिखर्वमितधनं आगमिष्यति।
8. व्यापारस्य सौकर्यमनुकूलं प्रक्रियामभिवर्धनं दृष्ट्वा पञ्चपञ्चाशत्तोत्तरेकलक्षं नूतनाः समवायाः षट्विंशतिप्रतिशतमेन पञ्जिकरणं विधास्यति।
9. विडियोकोन सम्पत्त्यायाः प्रत्यागतेन आय्डिबिआय् वित्तकोषेन ?सार्धद्वाब्जमितधनं प्राप्तवान्। जेएस्पिएल् समवायः ?पादोनाष्टाब्जमितधनात् ऋणमोक्षतां प्राप्नोति।
10. अस्माकं देशे तान्तव वस्त्रोद्योग सम्बन्धितं क्षेत्रे औद्योगिकोत्पादितव्यापारस्य स्तरं संवर्धनाय सप्ताधिकेकशतमाब्जमितधनं अपचिय केन्द्रीय मंत्रिमंडलेन प्रगतिः पथाधारित प्रोत्साहन पुरःसयीजानान्तर्गतं योजनां प्रेषितवान्।

**मुम्बई महानगरात प्रसादानंद वासुदेव उकिडवे महाभागः**






# हर शनिवार व रविवार करें मच्छरों पर वार

"स्वस्थ रहने की पहली शर्त है 'स्वच्छता'। प्रदेश में संचालित किए जा रहे 'स्वच्छता अभियान' से विषाणु जनित रोगों पर नियंत्रण पाया गया है। आइए, घर एवं कार्यस्थल के आसपास नियमित सफाई रखकर मच्छर जनित बीमारियों की रोकथाम में अपनी महती भूमिका निभाएं।"

\- योगी आदित्यनाथ
मुख्यमंत्री, उत्तर प्रदेश

## डेंगू से बचाव के उपाय




**यदि तेज बुखार के साथ सिर दर्द/आँखों के पीछे दर्द, जोड़ों और मांसपेशियों में दर्द, त्वचा पर लाल चकत्ते और थकान हो तो तुरन्त अपने नजदीकी स्वास्थ्य केन्द्र पर जाकर निःशुल्क उपचार कराएं**

**5 सितम्बर, 2021 से पूरे प्रदेश में सफाई-स्वच्छता-स्वास्थ्य संबंधी विशेष अभियान**

**प्रत्येक जनपद में एक वरिष्ठ अधिकारी की नोडल अधिकारी के रूप में तैनाती**

**माननीय जनप्रतिनिधियों के मार्गदर्शन में निगरानी समितियों के सहयोग से पूरे प्रदेश में अभियान का पर्यवेक्षण**

### इन बातों का रखें ध्यान


डबल मास्क पहनें



एक-दूसरे से दो गज़ की दूरी रखें


साबुन या सैनिटाइजर से बार-बार हाथ धोएं


प्रतिरोधक क्षमता बढ़ाएं



कोविड वैक्सीन समय पर लगवाएं


सूचना एवं जनसम्पर्क विभाग, उत्तर प्रदेश









"उत्तर प्रदेश हमेशा से ही साहसी और प्रेरणादायक महिलाओं की मातृभूमि रही है। विभिन्न क्षेत्रों में उन्हें सशक्त बनाने की दिशा में काम करने का अवसर मिलना हमारे लिए गौरव की बात है। नारी के मार्ग से विघ्नों को दूर कर उनके हर कदम में उनका साथ देना- यही नारी शक्ति के लिए हमारा मंत्र है।"

**- नरेंद्र मोदी, प्रधानमंत्री**



# बढ़ता उत्तर प्रदेश समृद्ध होता देश



# की महिलाओं को मिला सुरक्षा, संरक्षण, सशक्तिकरण और अधिकार




## हर कदम पर महिलाओं का दिया साथ, उनके सपने पूरा करने के लिए बढ़ाया हाथ

### महिलाएं ले रहीं राहत की सांस

- **गुंडाराज के बीते दिन!** अब गुंडे डर में जीते हैं और महिलाएं निडर चलती हैं, सिर उठाकर
- **न्याय की पहुँच अब तेज़ और व्यापक!** 218 नई फास्ट-ट्रैक कोर्ट, 81 मजिस्ट्रेट अदालतें और 81 अपर सत्र अदालतों की स्थापना
- **महिलाओं के लिए हेल्पडेस्क,** उत्तर प्रदेश के सभी 1,535 थानों में

### शिक्षा, उद्यमिता, सशक्तिकरण

- **बालिकाओं के लिए मुफ्त शिक्षा** ग्रेजुएशन तक, रखी आत्मनिर्भरता की मजबूत बुनियाद
- **'बेटी बचाओ - बेटी पढ़ाओ'** योजना में 51 लाख 25 हजार बेटियां लाभान्वित
- **1 लाख 50 हजार महिलाओं** को मिली सरकारी नौकरी
- **7 लाख 85 हजार महिलाओं को आर्थिक सहायता** मुख्यमंत्री कन्या सुमंगला योजना के माध्यम से
- **गारंटी-मुक्त बैंक लोन** 1.20 करोड़ से अधिक महिला लघु उद्यमियों को, मुद्रा योजना से
- **महिलाओं के सपनों को पूरा करने में उनकी मदद,** स्टैंड अप इंडिया के माध्यम से ₹2,300 करोड़ से अधिक के उद्यमिता ऋण
- **2 लाख से अधिक महिला रेहड़ी-पटरी विक्रेताओं** की सहायता पीएम स्वनिधि योजना के अंतर्गत
- **10 लाख स्वयं सहायता समूहों** के माध्यम से 1 करोड़ महिलाओं को स्वरोजगार
- **58,758 महिलाओं** की बैंकिंग सखी के रूप में नियुक्ति
- **28 लाख महिलाओं** को प्रधानमंत्री आवास योजना एवं मुख्यमंत्री आवास योजना के अन्तर्गत आवास
- **29 लाख 68 हजार निराश्रित महिलाओं** को प्रतिमाह रु. 500 पेंशन

### गरिमामयी जीवन, गुणवत्तापूर्ण जीवन

- **महिलाओं की गरिमा सुनिश्चित,** स्वच्छ भारत मिशन के अंतर्गत 2.61 करोड़ से अधिक शौचालयों के निर्माण से
- **4,450 पिंक टॉयलेट** का निर्माण
- **पानी ढोने से मिली मुक्ति,** जल जीवन मिशन के अंतर्गत 26 लाख परिवारों की महिलाओं को नल से पानी का कनेक्शन मिला
- **महिलाओं का जीवन हुआ धुआं मुक्त** उज्ज्वला योजना 1.0 के तहत 1.47 करोड़ से अधिक महिलाओं को मिला मुफ्त एलपीजी कनेक्शन
- **ज्यादा से ज्यादा** गरीब परिवारों को मुफ्त एलपीजी कनेक्शन प्रदान करने के लिए उज्ज्वला योजना 2.0 शुरु की गई

### स्वास्थ्य भी, सौभाग्य भी

- **1.60 लाख महिलाओं को घर का मालिकाना अधिकार हुआ सुनिश्चित** ऑनलाइन घरौनी वितरण के माध्यम से
- **40 लाख से अधिक गर्भवती महिलाओं को मिला पोषाहार का अधिकार** प्रधानमंत्री मातृ वंदना योजना के अंतर्गत
- **मुख्यमंत्री सामूहिक विवाह योजना** के अंतर्गत 1.52 लाख से अधिक कन्याओं ने विवाह कर नए सुखद जीवन की शुरुआत की

सूचना एवं जनसम्पर्क विभाग, उत्तर प्रदेश

## सम्पादकीयम्

# भारतीयत्वम्

सर्वत्र विजृम्भणम् । आदिनं कार्यावसादं किञ्चित् दूरीकर्तुं, मनसि किञ्चित् शान्तिं लब्धुं च प्रतिदिनं सायं दूरदर्शने वार्तादीन् पश्यामो वयम् । परन्तु वार्तायां प्रवञ्चना, लुण्ठनम्, उत्पीडनम, हिंसा, हत्या, व्यभिचारः, अत्याचारः, धर्षणम्, कलहः, हाहाकारः, सङ्घर्षः इत्यादीनि अमानवीय-दुष्कार्याणि एव दृष्टिपथम् आयान्ति य तद्दृष्ट्वा मनः इतोऽपि अवसादग्रस्तं जायते। शुभांशाः तु दुर्लभाः एव जाताः सन्ति वार्तायाम्, तत्तु विरलतया, कथञ्चित् सौभाग्येन एव दृश्यते। अनेन माध्यमेन सुसूक्ष्मदृष्ट्या विचार्यते चेत् मानवकुलः सम्प्रति कस्यां दिशि गच्छन् अस्ति इति सहजतया अनुमातुं शक्यते। जनसमाजे सर्वत्र केवलं विजृम्भणमेव परिलक्ष्यते, नान्यत्। किं कारणम् एतस्य इत्युक्ते स्वसंस्कृतेः तिलाञ्जलिः, परसंस्कृत्यां प्रीतिः इत्येव तस्य समुचितम् उत्तरमपि भवति। परसंस्कृतेः वाहकं तु आधुनिकं चलचित्रमेव। मद्यसेवनम्, धनाढ्यतायाः प्रदर्शनम्, द्युतक्रीडा, कुटिलता, चातुर्यम्, नार्यपहरणकौशलम्, धर्षणम, कलहः, विवादः, हिंसा, आमोदः, क्रूरता, स्वभावे कठोरता इत्यादिकीं सर्वामपि विपरीतशिक्षां बालेभ्यः चलचित्रजगदेव दत्तवदस्ति। अभिनेत्रीणां लघुवस्त्रपरिधानम्, यौवनप्रदर्शनमपि भारतीयसमाजस्य कृते एकं अभिशापतुल्यमेव। लघुवालाः तु अनुकरणशीलाः एव भवेयुः ननु, स्वाभाविकरूपेण । ते यत् पश्येयुः तदेव अनुकुर्युः इत्यत्र तेषां देवबालानां कः दोषः दोषः तु तन्निर्मातृणामेव। धनलोलुपता-कारणतः आकर्षकं चित्रनिर्माणम्, परिणामे जनसमाजस्य हानये जातम्, तत्कारणतः सर्वत्र एवं विजृम्भणम् उच्छृङ्खलञ्च अभवत् समाजे । यदा परम्परया आगतां शास्त्रमर्यदाम् उल्लयङ्घ्य जनमानसं स्वेच्छाचारिताम् अगच्छत् तदारभ्य एव भारतीयत्वं सर्वमपि समाप्तं जातमस्ति इत्युक्ते न कापि विप्रतिपत्तिः अत्र इति।

# महापुरुषो यशोवन्तदासः

महापुरुषो यशोवन्तः उत्कलीयः । 'पञ्चसखा' गोष्ठीषु अन्यतमः । अस्य जन्म-समयविषये यद्यपि प्रामाणिक-निर्दिष्टतथ्यं नास्ति तथापि अयं महात्मा षोडशशताब्दीय इति ऐतिहासिका समामनन्ति । जगत्सिंहपुरस्य 'अढंग' ग्रामे 1482 खीष्टाब्दे यशोवन्त एकस्मिन् क्षत्रियकुले जन्मोऽभूदिति केचन वदन्ति । अन्ये समालोचकाः अस्य जन्मसमयः 1487 इति द्रढयन्ति । अद्यापि यशोवन्तस्य समाधिपीठः अत्र उपलभ्यते । उदयकाहाणी मतेन-
'तिनि सतर पक्ष पुर येवे । अनन्त शिशु जनमिछि तेवे ।
तार संगे येवे भुज मिशिला । जगन्नाथ दास उदय हेला ?
सेहि अंके यशोवन्त टि जात । बलराम चारि पूर्वे उदित ?' इति । अस्य पितुर्नाम जगन्नाथस्तथा मातुर्नाम रेखादेवी स्तः । सर्वसाधारणे तस्य पिता जगु मल्लिकनाम्ना परिचितः । केचन बलभद्र मल्लः तस्य पितुर्नाम इति कथयन्ति । तत्पिता कुजंगराज- कर्मचारी आसीत् । यशोवन्तदासेन स्वपरिचयविषये किमपि नोक्तम् । 'मन्त्रबोलि' नामके तदीये पुस्तके महानुभावस्य यशोवन्तविषये इत्थं वर्तते । तथाहि- 'क्षत्रिय कुलरे जात ये मोहर अढंग स्थलरे अटइ घर ।
पितार नाम बलभद्र शुण यन्त्रबोलि कहे यशोवन्त पुण
मुं यशोवन्त क्षत्रि कुले जात बेलु पढिनांहि नोहि पण्डित ।
प्रभु आज्ञारे यन्त्रबोलि कहि ब्रह्माशंकर येउं पद ध्यायी
यशोवन्त दास गीतरे गाइ न देखि देखिला वन्तिआ वाइ ' इति ।
अपि च तच्छिष्येन लोहिदासेन षष्ठिमेला पुस्तके इत्थं भणितम्-
'लोहि कहन्ति शुण गो वाउलि । स्वामी जन्मस्थान देखिवा बुलि ।
पिता मातांक नाम अटे किस । बुझाइ कुह आहे लोहि दास
पितांक नाम बलभद्र जाण । मातांक नाम रेखादेवी जाण
क्षत्रिय कुले जनम होइले । नन्दी ग्रामरे नाना खेला कले ' इति ।
आत्मतत्त्वगवेषकोऽयं महात्मा असाधारण प्रतिभासंपन्न आसीत् । यशोवन्तदासः चैतन्यदेवस्य समसामयिक आसीत् । स चैतन्यदेवेन अनुप्राणित उपदिष्टो वेति केचन वदन्ति । तेनोक्तम्- एवं भूत येउं प्रभु तांक पञ्च भूत । एवंभूत सखा ये अटइ यशोवन्त ?' इति । द्वादशवर्षे यशोवन्तः वीतस्पृहः सन् स्वगृहं त्यक्तवान् । पुरीं गत्वा तत्र चैतन्यदेव-सन्निकर्षात् तस्य ज्ञानोदयः संजातः । पश्चात् चैतन्यात् दीक्षां नीत्वा स्वगृहं प्रस्थितवान् । पश्चात् अढंगराज्ञः रघुरामस्य भगिनीं अञ्जनां विवाहं चकार । भक्त-यशोवन्तस्य भगवद्भक्तिं विना अन्यत्किमपि कार्यं नासीत् । आजीविकाहीनस्य धनहीनस्य च यशोवन्तस्य कृते रघुरामः भूमिदानं कृतवान् । वासस्थानमपि तस्मै दत्तवान् । यदुक्तं लोहिदासेन- 'अति अलसुआ वन्तिआ दास । दिन वञ्चइ रघुराम पाश केवल मोर हरिनामे आश । भावे भणिले यशोवन्त दास ' इति । यशोवन्तः प्रख्यातयोगी तथा सिद्धपुरुष आसीत् । वैष्णवीयधारां प्रवाह्य स जनमानसं विमुग्धं कृतवान् । श्रीजगन्नाथं प्रति तस्य प्रगाढभक्तिः आसीत् । एकदा पुरीगमन समये एको ब्रह्मराक्षसः तस्य पथरोधं कृतवान् । अलौकीकशक्त्या यशोवन्तः तं तत्र मार्गे अवरुरोधः । अन्ते ब्रह्मराक्षस प्रार्थनया प्रीतः सन् यशोवन्तः गुण्डिचामन्दिरं रक्षणाय राज्ञः प्रता-परुद्रस्य सहमत्या तं गुण्डिचामन्दिरे अवस्थापितवान् । अद्यावधि 'वावनाभूत' नाम्ना सः तस्मिन् कार्ये संलग्न आसीत् । अलौकीकशक्ति संपन्नः यशोवन्तः सर्वदा श्रीकृष्णभक्त्या जाग्रतः आसीत् । वैष्णवधर्मे दीक्षितो भूत्वा तेन वैष्णव-सं-प्रदायसम्मताः नाना ग्रन्थाः विरचिताः । शिवस्वरोदयः तस्य प्रख्यातो योगग्रन्थ आसीत् । यद्यप्ययं ज्ञानमिश्राभक्तेः उपासक आसीत् तथापि योगमार्गं समर्थयितुं योगविषयकः शिवस्वरोदयो विरचितः । एतदतिरिक्तं अन्यानि हेतुदय भागवतम्, प्रेमभक्ति ब्रह्मगीता, रासः, गीत गोविन्दचन्द्र , आगत भविष्य मालिका, धानचोरी,वाघगीता, भजनसारः चौराशी आज्ञादीनि पुस्तकानि तस्य मौलिकानि सन्ति । यशोवन्तः स्वकीयमृत्यु-दिवसविषये पूर्वज्ञात आसीत् । पूर्वकथित मार्गशिर-शुक्ल-षष्ठीतिथौ तस्य महाप्रयाणोऽभूत् । एकस्मिन् कदम्बवृक्षमूले सः समाधिस्थो बभूव । तत्र प्राणान् तत्याज योगमार्गेण । यदुक्तं लोहिदासेन षष्ठीमेलायाम्- निभियिब ज्योति जलुछि प्रभु निकर दिने । मार्गशिर मास निदान यिवि उत्तरायणे। वारकला रविवाररे रविवार दिवस । पिण्डरु प्राण छाडि यिव मुं ये हेवि हरष। श्रीपुरुषोत्तम क्षेत्रकु पथ येंउ घटणा।
जगन्नाथस्य विग्रहे तस्य आत्मा विलीन अभवत्। अद्यावधि तस्य महाप्रयाण दिवसः तदीयभक्तैः साडम्बरं परिपाल्यते। पवित्रा ओढण षष्ठी तस्य श्राद्धदिवस रूपेण स्थिरीकृता। गीतगोविन्द चन्द्रः अस्य महान् ग्रन्थः।अयमाध्यात्मिक चेतनायाः प्रकृष्टो मार्गः। नाथधर्मस्य वार्त्ता अस्मिन् सुष्ठु प्रतिफलिता। इयं रचना जनप्रिया, उत्कलस्य प्रतिमुखे आध्यात्मिकी वार्तारूपेण प्रवर्तमाना दृश्यते। गीतगोविन्द चन्द्रस्य विषयवस्तुमुपजीव्य पश्चात् टीकागोविन्द चन्द्रः योगेन्द्र दैवज्ञेन विरचितः। अत्र भक्तिरस-करुणरसयोः वर्णनं मिलति। रासः यशोवन्तस्य क्षुद्रो ग्रन्थः। जीवात्मनि परमात्मदर्शनं अस्य विषयवस्तुः। द्वैतसिद्धान्तोऽत्र विवक्षितः। शिवस्वरोदयो योगपरकः। 21 अध्याय विशिष्टेऽस्मिन् ग्रन्थे नाना विषयाः शिव-पार्वती संम्बादेन विवक्षिताः। प्रेमभक्ति ब्रह्मगीता आध्यात्मिक तत्त्व-संम्बलिता। अत्र ज्ञानमिश्रा भक्तेः पराकाष्ठा प्रदर्शिता । ब्रह्मज्ञानमस्य मूलतत्त्वम्। तथाहि- से विन्दु योगमाया परे। रहिले अर्द्धमात्रा शिरे शेषे ॐकार बोलाइले। वेदरे प्रणव होइले। याहाकु अणाक्षर कहि। से विन्दु ब्रह्म अछि वहि तहुं जन्मिला एकाक्षर। अनन्त सर्पर आकार ताहाकु सुषुमुना कहि। से शिशुवेद घर सेहि ' इति । भविष्यमालिका अस्य महती कृतिः, या आगत-भविष्यविषये समलंकृता। यच्चोक्तम-'घोर ये अन्धार हेव चउविश प्रहर । घोषुथिवे भकत मो एकाइ अक्षर निश्चये कलकी रूप हेव अवतार ।नाशिवे सकल दुःख अवनीर भार ' इति।महामानवो यशोवन्तः उत्कलस्य महान् तपस्वी आसीत् । तस्य बहु ग्रन्था अद्यावधि अप्रकाशिताः वर्तन्ते । उत्कलभाषां प्रति तस्य अवदानमविस्मरणीयं महत्त्वपूर्णमिति न सन्देहस्यावकाशः । अलमति विस्तरेण । जय जगन्नाथ ।

**नन्दप्रदीप्तकुमारः**

## अमृतवाणी





**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**

मोहो विषादस्य कारणम्
गीतातत्वार्थबोधः संजय उवाच
तं तथा कृपयाविष्ट-
मश्रुपूर्णाकुलेक्षणम्।
विषीदन्तमिदं वाक्य-
मुवाच मधुसूदनः।।
संस्कृतभाष्यम्-
सञ्जयः भारतं वीक्ष्य
उवाच दृश्य साम्प्रतम्।

दृष्ट्वा शोकाकुलं पार्थं कृष्णः वचनम ब्रवीत् अर्जुनः रथारुढ़ं सारथिनं श्रीकृष्णमा दिष्टवान् यत् हेऽच्युत सेनयोरुभयोर्मध्ये मे रथं स्थापय। तत्र स्वकीयान् कुटुम्बिनः दृष्ट्वा तेषां मृत्युभयात् अर्जुनः मोहग्रस्तः शोकाकुलश्चा भवत्। गात्रञ्च शिथिलं सञ्जातम्। विकम्पयमानमर्जुनं दृष्ट्वा सञ्जयः धृतराष्ट्रं कथितवान् यत् हे भारत! धृतराष्ट्र! अर्जुनस्य सदृशः शूरवीरोऽपि स्वकुटुम्बिनः दृष्टः मोहग्रस्तः सञ्जातः। हस्ताभ्यामस्त्राण्यपि पातितानि । करुणयाश्रुपूर्णे नेत्रे वीक्ष्य विषादग्स्तमर्जुनं दृष्ट्वा नयनाभिरामः मधुसूदनः स्नेहसिक्तमिदं वाक्य मब्रवीत्। अत्र सञ्जयेन श्रीकृष्णाय मधुसूदन शब्दस्यः प्रयोगः कृतः। शब्दोऽत्रं विचारणीयः। एकदा भगवता श्रीकृष्णेन मधुनामकस्य राक्षसस्य बधः कृतःएतदस्मात् कारणादेव भगवतः श्रीकृष्णस्य नाम मधुसदनः अभवत्। दैत्यराजस्य मधोरपि सूदनो निहन्ता वसुदेवो क्षत्रियरूपेणावतीर्णो दुष्टदैत्यान् पृथ्वीभारभूतान् सर्वान्हनिष्यतीति मधुसूदनशब्दस्याभिप्रायः।

अन्वयशब्दार्थः- सञ्जयः उवाच सञ्जय ने कहा, तथा इस प्रकार, कृपया करुणा से,आविष्टम् ,अभिभूत (व्याकुल), अश्रुपूर्णा कुलेक्षणम् आँसुओं से परिपूर्ण नेत्र वाले, मधुसूदनः श्रीकृष्ण ने, उवाच कहा।

**तत्त्वार्थः-** जिस समय अर्जुन अपने कुटुम्बियों को देखकर मोह से व्यथित होकर धनुषवाण का त्याग कर अश्रुपूर्ण नेत्रों से अपने और श्रीकृष्ण को देख रहा था उस समय विषादग्रस्त अर्जुन का शरीर भय से काँप रहा था।करुणावरुणालय भगवान् श्रीकृष्ण ने अर्जुन को स्नेह भरी नजरों से देखते हुए यह बात कही ।

**रहस्यात्मक-तथ्य-** जिसे व्यास द्वारा दिव्य दृष्टि प्राप्त थी, वह सञ्जय कुरुक्षेत्र के मैदान में कौरव और पाण्डवों के बीच चल रहे युद्ध की तैयारी की सारी बातें उस धृतराष्ट्र को बता रहा है जिसने अन्यायऔर अधर्म पूर्वक राष्ट्र को बलात् अपने अधीन को विषादग्रस्त अर्जुन और भगवान् श्रीकृष्ण के मध्य चल रहे संवाद को सुना रहा है। सञ्जय ने कहा कि हे धके इस आग्रह पर कि हे कृष्ण ! अर्जुन के इस आग्रह को आदेश मानकर सारथी भगवान् श्रीकृष्ण ने वैसा ही किया जैसा अर्जुन ने कहा।भगवान् सदैव भक्त के प्रेम के अधीन हो जाते हैं। आज परमात्मा कृष्ण ,जीव अर्जुन के प्रेम के अधीन होकर सारथी अर्थात् नौकर बनकर कार्य कर रहे हैं। जो जीव का स्वामी है वह दास बने हुए हैं, यह कैसी है ईश्वर की अद्भुत लीला। जिसे योगी - यती साधक अनन्त काल ही नहीं अपितु युग - युगान्तर तक साधना के बल पर प्रसन्न नहीं कर पाते, वही परमात्मा आज अर्जुन का सारथी बना हुआ है। भगवान् अर्जुन के बाल सखा के साथ-साथ उसके सन्मित्र भी हैं।एक सच्चा मित्र हमेशा अपने मित्र का कल्याण ही चाहता है।अर्जुन धर्म के आश्रित होकर भगवान् का विश्वास पात्र बन चुका है अर्थात् श्रीकृष्ण स्वयं धर्म के अवतार हैं धर्म की स्थापना कर जन जीवन को शान्ति प्रदान करना ही उनका परम लक्ष्य है। 'यतो धर्मस्ततःकृष्णो यतःकृष्णस्ततो जयः' अर्थात् - जहाँ धर्म है वहीं कृष्ण हैं और जहाँ कृष्ण है वहीं जय है। तातपर्य है कि आखिर धर्मस्वरूप श्रीकृष्ण के साथ रहने से ही अर्जुन की विजय हुई। सञ्जयने भगवान् श्रीकृष्णः के लिए मधुसूदन शब्द का प्रयोग कर मानो धृतराष्ट्र को संकेत ही संकेत में यह कह दिया है कि जिस भगवान् श्रीकृष्ण ने मधु नामकअधर्मी अत्याचारी राक्षस का बध कर यह सिद्ध कर दिया है कि जहाँ धर्म है वहाँ अधर्म का बने रहना कैसे सम्भव है इसलिए हे धृतराष्ट्र !कौरव पक्षीय सेनाओं की पराजय सुनिश्चित भगवान् पहले मधु नामक राक्षस का नाश कर अब अर्जुन के अन्दरजो अज्ञान रूपी मधु (मोह) है उसका समूल नाश कर ज्ञान की स्थापना करने वाले हैं।

## रम्या रामायणी कथा




**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः।**

श्रीरामकथा सर्वसमाजस्य कृते वर्तते। श्रीराम कथायां भारतीय संस्कृतेः समाहितास्ति। अद्यापि वयं सर्वे श्रीरामकथामाध्यमेन स्वमानवजीवनमेकमादर्शजीवनरूपे सुप्रतिष्ठितं कर्तुं शक्नुमः। वयं समाजे केन सह कीदृक्व्यवहारं कुर्यामेति रामायणे पगे पगे वर्णितम्। जगति ते जना धन्याः सन्ति, ये श्रीरामकथा माध्यमेन जीवनं जीवन्ति। अस्माकं तत्त्वदर्शिनो महापुरुषाः सदा मानवानां कल्याणार्थं समये समये स्वानुभगम्यविचारं प्रकयन्तीति तत्सूक्तिरूपे जनमानस हृदयेऽद्यापि तन्सन्मार्गं प्रति प्रेरयति। अस्माकं भारतीयानां सौभाग्यं वर्तते यदस्माकं धर्मशात्रेषु नीतिग्रन्थेषु च साः सूक्तयः प्राप्यन्ते। सूक्तिर्मानवविवेकं जागृतं कृत्वा तस्मै समुचितं गतिं मतिं च प्रदायितुमेका सदुत्प्रेक्षा वर्तते। श्रीरामचरितमानसेऽस्मिन्सन्दर्भे साधूक्तम्-
'जहाँ सुमति तहाँ सम्पत्ति नाना।
जहाँ कुमति तहाँ विपत्ति निधाना।।' इति।
भगवत्कृपया महापुरुषाणां सान्निध्यं प्राप्य येषां मनुष्याणां हृदये सुबुद्धिर्वसति तत्र विविधसम्पत्यः स्वतः समागत्य तत्सेवां कृत्वा मोदयन्ति। किन्तु यदा कुसङ्गजन्यप्रभावान्मनुष्याणां जीवनोन्नतिसाधिनी बुद्धिभ्रष्टा भूयते, तदा तत्सर्वाणि कार्याणि सदैव धर्मशास्त्रविरुद्धानि भवन्ति, अस्मात्कारणात्तज्जीवने नानाविपत्तयः समागत्य तत्सुखशान्तिसमृद्धयश्चावरुद्धा भूयन्ते। अत एव मनुष्यः सुखशान्तिसमृद्धयादीनां प्राप्तुं सर्वदा सुबुद्ध्या सर्वकार्याणां सम्पादनं कुर्यात्, अनेन तज्जीवनं सुखी भविष्यतीति मे मतिः।

**-क्रमशः**

आचार्य अरविन्द पाण्डेय

## ॥ अमृतं संस्कृतम्॥



**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

।। कृपाकेन्द्रं कृष्णं समाश्रय।।
गीताज्ञानं सार्वजनिकं सार्वकालिकं
सार्वभौमिकञ्च सदैव सरति। ।
अतः प्रत्येकं युगे परिवेशानुकूलेन तस्याथी
विद्वद्भिः व्यस्थाप्यते।
इदं कर्तव्यमपि विदुषां।।
।। सर्व धर्मान् परित्यज्य।।
अस्मिन् पदे सर्वपदेन वहवो भावाः संचरन्ति।
सर्व धर्मान् सर्वधर्मनिर्णयान्
सर्वधर्म निर्धारणानि च।
मानवाः चतुराः स्वार्थिनश्च भवन्ति।।
प्रायः स्वत्रुटिं न स्वकुर्वन्ति। ।
स्व कुस्वभावानुबद्धेन यः तस्मै रोचते तमेव
स्वकरोति समर्थयति च।
आत्म कल्याणाय वहवो पन्थानः शास्त्रदिशा
सरन्ति। यथा ज्ञानयोग,कर्मयोगः, भक्तियोगः,
लययोगः, हठयोगः, इत्येषु प्रभुकृपैव
साफल्यकारणं।।
तर्हि कृपाकेन्द्रं कृष्णं समाश्रय।।
येन सर्वयोगः सुलभतया कृष्णरक्षणे
साफल्यमेष्यति।

इदमपि भवति योग्यता नास्ति तथापि लोकप्रतिष्ठायै लोकप्रशंसायै च मानवः प्रवृत्तो भवति। परं भवत्यसफलः। कृष्णः सर्वज्ञः कस्य कृते किं शोभनं इति सर्वं सर्वज्ञः जानाति।। अतः तदनुकूलाय यतते कृष्णः येन मानवः सर्वथा सफलो भवति।। सम्प्रति तु वहवः काल्पनिकाः योगाः अपसरन्ति। प्रत्यहं नूतनः नूतनः भगवान् अवतरति।। नूतनः नूतनः धर्मः वेदामूलकः नृत्यति कः आत्मा,कः परमात्मा, इत्यनयोः कस्सम्बन्धः इति सर्वमज्ञात्वा धर्मगुरुः धर्मान् चालयति। अतः कृष्णप्रतिपादित एव धर्मः वास्तविकः नान्यः कदापि।
अतः सर्वधर्मान धर्मनिर्णयं, धर्मनिर्धारणञ्च परित्यज्य कृष्णं समाश्रय ।।

**॥ विमलः हिन्दी भावानुवादः॥**

गीताज्ञान सार्वकालिक सार्वभौमिक है।। अतः इस परिप्रेक्ष्य में मताग्रह तथा दुराग्रह को त्याग कर गीताज्ञान के यथार्थ प्रकाश का लाभ लेना चाहिए।।
सर्वधर्मान सर्वधर्म निर्णय तथा सर्व धर्म निर्धारण को त्याग कर नित्य प्रकाशमय कृष्ण पर सर्वात्मना विश्वास करना चाहिए। कृष्ण सर्वज्ञ तथा त्रिकालज्ञ हैं। सम्पूर्ण संसार के सुहृद् हैं। गीता सुहृदः सर्वभूतानां अतः उनके द्वारा सदैव ही निश्चित आत्म कल्याण अग्रसर होगा। अतः निस्सन्दिग्ध हो कृष्ण शरण ही कल्याणकारी होगा।
आत्मकल्याणाय अनेक योग संचरित हैं। ज्ञान योग, कर्मयोग, भक्तियोग हठयोग, लययोग, विभिन्न प्रकार का तन्त्र मन्त्र। वैयक्तिक शास्त्रविरूद्ध काल्पनिक योग। इन सबों के विभ्रम से त्राणार्थ कृष्ण शरण ही शाश्वत भ्रमरहित आत्मकल्याणकारी होगा।
मानव चतुर प्रबल स्वार्थी है। प्रायः अपना दोष नहीं स्वीकारता है।
अतः अपने स्वभावानुकूल धर्म का निर्धारण करता है। उसी को तर्कसंगत बनाने का कुप्रयास करता है। विद्वत् समाज का यह चिन्तन है। कोई पाठ, तो कोई समाजसेवा, तो कोई लेखन कोई कुछ कोई कुछ। ।पर गीताज्ञान अग्रसर हृै यज्ञानां जपयज्ञोऽस्मि भगवान् के कथन से जप यज्ञ की श्रेष्ठता अग्रसर है। अतः जप यज्ञ का अधिकाधिक आश्रय आत्मकल्याणकर है।।
मेरी अनुभूति में जप,ध्यान, मौन का निश्चित दैनिक आलम्बन श्रेयस्कर है।
एक दैनिक सम्पूर्ण गीतापाठी सज्जन राजस्थान के मिले पर वे एकान्त में मृत्यु भय से आक्रान्त रहते थे। दैवी गुणों में ' अभयम' प्रथम स्थान है। जिसके जीवन में अभयता नहीं है वह कभी गीताज्ञान का यथार्थ अनुयाई नहीं जिसका एकान्त पवित्र है वही धन्य सिद्ध वास्तविक साधक सन्त है। एकान्त साधना केलिए अभय का संचार अनिवार्य है। इसलिए 16 वें अध्याय में दैवीयगुणों में अभय को प्रथम प्रतिष्ठित स्थान प्राप्त है। अतः वास्तविक यथार्थ कल्याण केलिए अपेक्षित धर्म का संचार कृष्ण शरण से ही होगा। च कृतात्मसाक्षात्कार सन्त स्वामीरामसुखदास जी महाराज का निवेदन है सबसे अच्छी प्रार्थना है भगवान् से कहें मुझे अच्छा बना दो। मुझसे अच्छा काम करवा लो। जीव को अपने दोषों का भी यथार्थ भी ज्ञान कहां है अतः कृष्णं **समाश्रय समाश्रय समाश्रय समाश्रय समाश्रय समाश्रय।**

## कुतः भक्तिकारणं अवगते सति श्रवणकृते

केवलं विष्णुसेवामाध्यमेनं विष्णौ लीनं सम्भवेत्। इहलोके परलोके च विष्णुं विना अन्यद् किमपि नास्ति। ये मानवाः संसारानलेन सन्तप्ताः सन्तोऽपिकलिकलुषनाशकस्य भवभयनिवारकस्य परमपावनविष्णोः नाम संकीर्त्तयन्ति, ते एव निश्चितरूपेण अस्मिन् संसारे न पुनर्जायन्ते। तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये। भवभयक्षयं तापतापिता मुहुरहो जनो संसरन्ति नो। वस्तुतस्तु हरौ भक्तिः समर्पितायां सत्यां जीवः संसारचक्रस्य निष्पेषणात्मुक्तिं प्राप्नोति। अत्र एकः संगतप्रश्न आयाति यद् कीदृश्या भक्त्या संसारस्य संसरनं न भवेत्? अथवा ईश्वरे कीदृशी भक्तिः करणीया? तत्रैव उच्यते यद् भगद्भक्तः तस्य हृदि भगवद्विषयिनीं भक्तिं जागरयिषति। कुतः भक्तिकारणं अवगते सति श्रवणकृते सति वा त्रिलोकस्थप्रजाः पवित्रं भवन्ति, संसारवासना सम्पूर्णभावेन निवृत्ताः भवन्ति। कल्किपुराणे मोक्षलाभविषये सम्यग् आलोचनं प्राप्यते यद् लोकतन्त्रज्ञः विचक्षणः साधकः उत्तमधिया अक्ष्यादिपञ्चज्ञाने-इन्द्रियाणि मनः संयम्य पञ्चज्ञानाश्रयेषु गुरुचरणेषु देहं समर्पयिष्यति। अनेन कर्मणा गुरुः यदि प्रसन्नो भवति तर्हि ईश्वरोऽपि प्रसन्नो भवति। गुरोरादेशानुसारेण प्रणवम् अग्निप्रियां च अन्तरा नमः अनन्यहृदये स्मरिष्यति। तदनन्तरं शिष्यः सुसमाहिते हृदये पाद्यार्घ्याचमनीयादिभिः उत्तमैकाग्रचित्ते वासुदेवस्य पादपद्मं सम्यग् अर्चयिष्यति। पश्चात् हृदि कमलमध्यगतं नयनलोभनीयं सर्वाङ्गसुन्दरं वासुदेवं चिन्तयिष्यति। एवं ध्यात्वा ज्ञानी एकान्त भावज्ञजनोऽपि मनोबुद्धीन्द्रियादिभिः सह आत्मानं हरौ समर्पयिष्यति।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
**-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**

**वैधानिक सूचनाः** आह्निक वार्ता पत्रम् से सम्बन्धित समस्त विवाद के निपटारे का क्षेत्र इलाहाबाद (प्रयागराज) न्यायालय होगा।